श्रीः

# श्रीसप्तपदीहृदयम् ।

## महामहिमश्रीमदमृतवाग्भवाचार्यप्रणीतम् ।

शिवशक्तिमयं विश्वं परस्परसुखाप्तये ॥
विवाहितं विजयते सप्तपद्या प्रतिश्रुतम् ॥ १ ॥

प्रथमतस्तावत् समुचितेष्टदेवताजयकारमयं मङ्गलमातनोत्याचार्यवर्यः—

शिवक्तिमयं विश्वं.....................प्रतिश्रुतम् ॥१॥

यत्किञ्चिदिदं विश्वं तत्सर्वमपि शिवशक्तिमयम् । शिवश्च स्वयं शक्तिमयः शक्तिश्चापि शिवमयी यथोक्तम्—

'न शिवः शक्तिरहितो न शक्तिः शिववर्जिता ।'

तयोः शिवशक्त्योर्विलासमात्रसतत्त्वमिदं विश्वं सुतरां शिवशक्तिमयम् । अत्र चानन्तवैचित्र्यचित्रिते । संसारे क्वचित् शिवत्वप्राधान्यं क्वचिच्च शक्तित्वप्राधान्यं प्रकाशते । जनैश्चापि ध्यानोपासनादिव्यवहारसिद्धये धर्मार्थकाममोक्षरूपफलचतुष्टयसिद्धये च क्वापि शिवत्वप्राधान्यं कल्प्यते क्वचिच्च

शक्तित्वप्राधान्यम् । तदित्थं विश्वं स्फुटं पुरुषरूपतया शिवमयं स्त्रीरूपतया च शक्तिमयम् । तदुभयरूपं परस्परस्य सुखस्य प्राप्तये सप्तपद्या– धर्मशास्त्रादिप्रसिद्धया अग्निसाक्षिकया सप्तपदगत्या· प्रतिश्रुतम्—प्रतिज्ञातं सत् विवाहितं भूत्वा विजयते—सर्वोत्कर्षेण वर्तते । यस्तु विवाहः सप्तपदी प्रतिज्ञारहितः, नासौ सर्वोत्कर्षेण वर्तितुं शक्नोति । इत्थंभूत्वा पैशाचराक्षसादयो विवाहा गर्हिता एव ॥१॥

शिव शक्तिमय इस सारे संसारके व्यक्तियोंका एक दूसरेके सुखके लिये सप्तपदीसे प्रतिज्ञाबद्ध होकर विवाह करना परम कल्याणकारक है ।

The world of men and women ( Shiva and Shakti ), united in the bond of marriage by Sapta Padi for promoting the pleasures of one another together rises with triumph.

**प्रथमपदे वर आह—(१)**

**मदतिथिगुरुपुत्रभ्रातृवर्गं समस्तं**
**विविधविधिविधानैः साधितैरन्नपानैः ॥**
**इह हि परिचरन्ती माननीया स्वराष्ट्रे**
**भवसि जयसि लोकं मद्गृहस्था सुधाशे ! ॥२॥**

यासौ सप्तपदी तत्र प्रथमे पदे वर इषेत्वेति वदन् यद्यत प्रतिजानीते तत्तद्द्वाभ्यां पद्याभ्यामाह—

मदतिथि ........................................ सुधाशे ॥२॥

हे सुधाशे—सुधाम्—अमृतमश्नातीति सुधाशा । सैवं भूत्वा वधूरत्र संबुध्यते हे सुधाश इति । यो जनः देवान् पितॄन-तिथिप्रभृतींश्च भोजयित्वा स्वयमश्नाति स एव यज्ञशिष्टाशी भवन् सुधाश इति मन्तव्यः । भारतीया वधूश्चैवं सर्वदैव सुधाशा । विविधैः—बहु प्रकारैः विधिविधानैः—पाकशास्त्र-प्रसिद्धाभिः पाचनशैलिभिः साधितैः—सुसंस्कृतैः—सुपाचितै रन्नपानैः—भोज्यैः पेयैश्च, मदतिथिगुरुपुत्रभ्रातृवर्गम्—ममा-तिथिपितृगुरुप्रभृतीन् पूजनीयान्, पुत्रशिष्यप्रभृतीननुकम्पनीयान्, भ्रातृस्वसृसुहृत्प्रभृतींश्च समान् जनान् इति भावः । समस्तम् अखिलमपि मत्सम्बद्धं जनसमुदायम्, इह भूलोके गृहस्थधर्मे वा परिचरन्ती—भोज्यपेयादिना सर्वानपि तर्पयन्ती, स्वे राष्ट्रे माननीया—आदरार्हा भवसि । सर्वेऽपि गृहस्थाश्रमधर्ममाचरन्तीं त्वामादरसत्कारदृष्ट्या द्रक्ष्यन्तीति भावः । किञ्च मद्गृहस्था—मम गृहे गृहस्थधर्ममाचरन्ती स्थिता लोकम्—इमं भूलोकं जयसि । भूलोकेऽवाप्यं पूर्णमानन्दमवाप्स्यसि । सत्वरं चावाप्स्यसीति विवक्षया वर्तमानसमीपे भविष्ये वर्तमानवदेव लट् प्रयुक्तः ।

पहले पदपर वर कहता है:—

ओ अमृतका भोजन करने वाली, मेरे अतिथि, गुरु, पुत्र और सब सगे सम्बन्धियोंको अनेक प्रकारसे रच पच कर बनाये गये खाने पीनेके पदार्थोंसे प्रसन्न करती हुई तुम अपने राष्ट्रके आदरका पात्र बन जाओगी और मेरे घर में रहती हुई तुम इस लोक (भूलोक) को जीत लोगी ।

*At the first step, the husband says:—*

O, the eater of sacred food, if you go on entertaining my guests ( saints, scholars, sages, relations or whosoever happens to come to my residence ) parents, offspring and the circle of my friends, with various foodstuffs and drinks prepared carefully, you shall grow respectable for my nation, and. living with me as my wife, you shall conquer this world, the 'BHOOLOKA'.

इषे नयाम्यहं विष्णुस्त्वां सुन्दरि ! सुधाशने ॥
पदमेकमिति प्रोक्ते पत्या प्राह वधूरिदम् ॥३॥

अथ प्रथम एव पदे वरकृतः प्रतिज्ञामयः अपरोऽयं श्लोकः-

इषे नयाम्यहं........................ ........वधूरिदम् ॥३॥

कन्यादानविधौ वरे विष्णुत्वकल्पना वध्वां च लक्ष्मीत्व-कल्पना शास्त्रप्रसिद्धा। अत एव वरः आह—हे पूर्वव्याख्यात-प्रकारेण सुधाशने—ऽमृतभोजिनि, सुन्दरि—सुन्दराकारमयि वधु; अहं वररूपो विष्णुस्त्वां इषे—अन्नार्थम् एकं पदं नयामि इत्येषा वरकृता प्रतिज्ञा । तात्पर्यं चैतद्—आवयोर्विवाहस्य प्रयोजनमेतद् यदावामन्नवन्तावन्नादावन्नदातारौ च भवेवेति । अन्नं नात्र सर्वस्यापि भोज्यपेयलेह्यस्याहारजातस्य ग्रहणम् । इत्येवं बुभूषता भविष्यता पत्या प्रोक्ते सति भविष्यन्ती वधूरिदमाह—यच्चतुर्थेन पद्येन प्रोच्यते ।

अमृतका भोजन करने वाली ओ सुन्दरि, विष्णुरूप मैं

तुमको अन्नके लिये एक पद अपने साथ ले चल रहा हूँ। पतिके ऐसा कहने पर बहू कहती है।

O, beautiful lady, I, assuming myself to be Vishnu, the Great Lord, take this first step with you for corn. Thus asked by the husband the wife replied as follows:--

**प्रथमपदे वधूराह—**

**तवार्जितैरन्नवरैः सुरचैः**
**सुपाचितैस्त्वां परितोषयामि ॥**
**तव स्ववर्गं च समस्तमेव**
**त्वदाज्ञया साधु सभाजयामि ॥४॥**

इदं च प्रथम पदे वधूः प्रतिजानीतेः—
तवार्जितैरन्नवरैः ........................ सभाजयामि ॥४॥

त्वया अर्जितैः श्रेष्ठैरन्नैः मया च तैः सुरचितैः सुष्ठु च पाचितैस्त्वां तवाज्ञया च त्वदीयं सर्वमपि वर्गमहं परितोषयामि—अन्नादिकं भोजयित्वा सर्वानप्यहं परितुष्टान् करिष्यामीति सर्वत्रापि वर्तमानसमीपे वर्तमानवत् प्रयोगाः। अन्नादेरर्जनं तत् त्वदायत्तम् तस्य रक्षणसंस्करणादि च मदायत्तमिति भावः। सर्वेषां सेवां साधु करिष्यामि। किञ्च सदा तवाज्ञानुवर्तिनी पतिव्रतानामग्रिमा भविष्यामीत्यहं प्रतिजाने। अत्र प्रथमे पदे भूलोकजयः ध्वनितः।

पहले पदपर बहू कहती हैः—

आप जो अन्न कमाकर लाओगे उसे मैं सुरक्षित रखूँगी और भलीभाँति पकाकर आपको खिलाऊँगी। आपकी आज्ञा से आपके परिवारको भी तृप्त करूँगी।

*At the firet step, the wife says:—*

Yes, Sir, I will take care of the corn earned by you and satisfy you with various items of food prepared. I will be at your command to satisfy your family and thus secure a prominent place among the respectable ladies.

द्वितीयपदे वर आह—(२)
शौचाऽऽचारविचारसाधितपरीणाहेन सम्पोषितः
स्वो वर्गोऽहमपि प्रसन्नहृदयः साराङ्गयष्टिः सदा ॥
ऊर्जस्वि प्रभवामि कर्तु मखिलं राष्ट्रं स्वकीयं महत्
तस्माच्चारुदृढाङ्गशोभिनि! भुवर्लोकं मया यास्यसि ॥५॥

द्वितीयस्मिन् पदे ऊर्जे त्वेति वदन् वर एतत् प्रतिजानीते—

शौचा ........................................ यास्यसि ॥५॥

शौचेन—शारीरादिशुद्धया, आचारेण—धर्मशास्त्रप्रसिद्धेन सदाचारेण, विचारैश्च धर्मानुकूलैः साधितेन परीणाहेन गृहस्थोपयोगिना वस्तुजातेन सम्यक् पोषितोऽहं मम च स्वकीयो वर्गोऽपि सम्पोषितः सन् प्रसन्नहृदयः - अस्माकं सर्वेषां हृदयानि प्रसन्नानि सञ्जातानि। किञ्चैतेनाहं मम वर्गश्च

सकलः साराङ्गयष्टिः—सुदृढशरीरः सन् स्वकीयमखिलं—समस्तम्, महत् विशालम्—आदक्षिणाब्धेराहिमाचलं विस्तृतं राष्ट्रमपि सदोर्जस्वि—बलप्राणवत् कर्तुं प्रभवामि। तदेव राष्ट्रं सबलं सम्भवति यत्रत्या जना बलवन्तः स्युः। तदित्थमहं स्ववर्गेण साकं सबलो भूत्वा स्वराष्ट्रमपि सबलं कर्तुं शक्ष्यामि। तस्मात्—राष्ट्रस्योर्जस्विकरणेन हेतुना। हे चारु—दृढाङ्ग शोभिनि—चारुणा—सुन्दरेण, दृढेन—शक्तिमता, अङ्गेन—शरीरेण—शोभते इति तस्याः सम्बुद्धिरियम्। हे बधू तेन पुण्येन मया साकं भुवर्लोकं द्वितीयं यास्यसि। द्वितीयपदचलनेनात्र द्वितीयलोकजयो ध्वन्यते।

दूसरे पदपर वर कहता है:—

ओ सुन्दर दृढ़ शरीर वाली, पवित्रता, आचार और विचारसे सुव्यस्थित घरकी सम्पूर्ण सामग्रीसे सम्पुष्ट मेरा परिवार और मैं प्रसन्नहृदय, बलवान् एवं स्फूर्तिमान् बन कर अपने राष्ट्रको महान् बना सकूँगा। उससे तुम मेरे साथ भुवर्लोककी यात्रा कर सकोगी।

*At the second step, the husband says:—*

All the refined obj ects of my household, consecrated by observing the sanctity of sentiments, mentality and conduct, are sure to make me and my family strong and happy for ever. Thus grown strong, I will be able to add to the greatness of my nation. O, lady,

charming due to the beautiful and healthy body, you shall then lead me on to the 'BHUVARLOKA'

ऊर्जे नयाम्यहं विष्णुस्त्वां चारुदृढविग्रहे ! ॥
पदद्वयमिति प्रोक्ते पत्या प्राह वधूरिदम् ॥६॥

द्वितीयस्मिन्नेव पदे वर एतदाह—
ऊर्जे नयाम्यहं ........................ वधूरिदम् ॥६॥

हे चारुदृढविग्रहे—सुन्दरसुदृढशरीरे ! वधु ! विष्णुरूपोऽहम् ऊर्जे—बलप्राप्तये त्वां पदद्वयं नयामि । इत्येवं भविष्यता पत्या प्रोक्ते सति भविष्यन्ती वधूरिदं प्राह—

ओ सुन्दर दृढ शरीर वाली, विष्णुरूप मैं तुमको शरीर शक्ति और प्राणशक्तिकी उन्नति के लिये दो पद अपने साथ ले चल रहा हूँ । पतिके ऐसा कहने पर बहू कहती है:—

O, healthy and beautiful lady, I, Vishnu, take this second step with you for the strength of body, character and life. Thus asked by the husband, the wife replied as follows:—

द्वितीयपदे वधूराह—

यथाबलं त्वद्गृहपारिणाह्यं
परीक्ष्य शौचादिविधानतोऽहम् ॥
ऊर्जप्रदं रोगहरं त्वदर्थे
कुटुम्बपुष्ट्यै परिसाधयामि ॥७॥

यथाबलं.............................परिसाधयामि ॥७॥

अहं यथाबलम्--बलमनतिक्रम्य—स्वशक्तेरनुसारं शौचादि—विधानतः—शास्त्रोपदिष्टैः शौचाचारविचारैस्त्वद्-गृहस्य पारिणाह्यम्—गृहोपयोगिवस्तुजातं परीक्ष्य—परित ईक्षित्वा, सम्यक् सर्वस्य क्षेमचिन्तां कृत्वा, तत् पारिणाह्यमेव—त्वदर्थे—तुभ्यं तव कुटुम्बस्य च पुष्टयै—तव कुटुम्ब मप्यूर्जस्वि कर्तु ऊर्जप्रदं—बलप्रदं रोगहरं—स्वास्थ्यप्रदं चापि परिसाधयामि—सम्पादयामि । तथा तस्य प्रबन्धं करिष्यामि यथा सर्वमूर्जप्रदं रोगहरं च भविष्यति ।

दूसरे पदपर वह कहती है:—

आपके घरकी सामग्रीको अपनी सामर्थ्यके अनुसार मैं पवित्रता आदिसे इस ढंगसे सँभाल कर रखूँगी कि वह आपके तथा आपके कुटुम्बके लिये स्फूर्तिदायक एवं आरोग्य प्रद होगी ।

*At the second step, the wife says:—*

**Yes, Sir, I will keep the commodities of your household clean and carefully according to my capacity and reason. I will manage them so that they may give buoyance to and remove disease from you and the family.**

तृतीयपदे वर आह—(३)

द्रव्यक्षेमविचारभारमखिलं दत्त्वा त्वदीये करे ।
नानोपायविधानतः स्वयमहं द्रव्याणि सम्प्रार्जयन् ।।
स्वं राष्ट्रं धनपूरितं विरचयन्नर्थज्ञधुर्ये ! शुभे !
स्वर्लोकं प्रभवामि जेतुमिह हि प्राज्ये स्वराष्ट्रे त्वया ।।८।।

अथ तृतीयस्मिन् पदे रायस्पोषायत्वेतिवदन् वरो द्वाभ्यां श्लोकाभ्यां प्रतिजानीते—

द्रव्यक्षेम .................................... त्वया ।।८।।

हे अर्थज्ञासु—अर्थस्य योगक्षेमज्ञासु, धुर्ये—श्रेष्ठे शुभे ! वधु ! अहं त्वदीये करे—हस्ते, द्रव्यस्य—धनस्य, क्षेमविचारस्य रक्षणस्य विचारस्य भारमखिलम्—सर्वमपि धनरक्षणोपाय-चिन्ताभारं दत्त्वा स्वयम्—आत्मना नानोपायविधानतः—नानाप्रकाराणामुपायानां विधिना द्रव्याणि—धनानि, सम्प्रार्जयन्—सम्यक् प्रकर्षेणार्जयन्; स्वयं च राष्ट्रमपि धनेन परिपूर्णं विरचयन् इह एव प्राज्ये—समृद्धे स्वकीये राष्ट्रे एव त्वया सह तिष्ठन्निहस्थोऽपि तृतीयं लोकं स्वर्लोकाभिधं जेतुं प्रभवामि—स्वर्गलोकजयोऽपि त्वत् साहाय्येन मे मत्साहाय्येन च तव-सम्भवति । एवं तृतीयपदगतिस्तृतीयलोकजयमुपलक्षयति ।

*तीसरे पदपर वर कहता है:—*

अर्थ शास्त्रको जानने वाली, शुभलक्षणसम्पन्न बहू जी, अनेक उपायोंसे धन कमाता हुआ मैं उसकी रक्षाका सारा

विचार भार तुम्हें सौंप दूँगा। इस भाँति अपने राष्ट्रको धनाढ्य बनाता हुआ मैं तुम्हारे साथ स्वर्गलोकको जीतने में समर्थ हो जाऊँगा।

*At the third step, the husband says:—*

Shifting the responsibility of the preservance of wealth into your hands, I will devote myself freely to the earning of money through various fair means. O, the leading economist, blessed lady, thus increasing the wealth of my nation and living with you in my prosperous country, I will conquer the 'SVARLOKA' ( grow competent with the happiest ).

**रायस्पोषाय विष्णुस्त्वामर्थविज्ञे ! नयाम्यहम् ॥**
**पदत्रयमिति प्रोक्ते पत्या प्राह वधूरिदम् ॥६॥**

तृतीयस्मिन्नेव पदे प्रतिज्ञाशेषोऽयम्—

अर्थ—धनं तत्क्षेमचिन्तां च विशेषेण जानातीति—अर्थविज्ञा। तत्सम्बुद्धिः—हे अर्थविज्ञे ! विष्णुरूपोऽहं रायस्पोषाय—धनस्य पुष्ट्यै त्वां पद त्रयं नयामि। इत्येवं पत्या प्रोक्ते सति भविष्यन्ती वधूरिदमाह—

अर्थशास्त्रकी विशेषज्ञ बहूजी, विष्णुरूप मैं तुमको धन

कीं समृद्धिके लिये तीन पद अपने साथ ले चल रहा हूँ। पतिके ऐसा कहनेपर बहू कहती है।

Lady conomist, I, Vishnu, cover this third step with you for the increase of our wealth. Thus asked by the husband the wife replied as follows:—

तृतीयपदे वधूराह—

गार्हस्थ्यसाधनसमस्तपदार्थवर्ग-
मूलं धनं विधिवदर्जितमस्ति यत्ते ॥
आयव्ययादि सुपरीक्ष्य निदेशत ते
त्वत्प्रीतये बहुविधं परिवर्द्धयामि ॥१०॥

गार्हस्थ्यसाधन..................परिवर्द्धयामि ॥१०॥

गृहस्थस्य भावो गार्हस्थ्यं, गृहस्थजीवनम्, तस्य साधनभूतो यः समस्तपदार्थवर्गः—सकलवस्तुजातसमूहः, तस्य मूलं तु धनं भवति। एवं विधं विधिवत्—शास्त्रोक्तविधानानुसारम् अर्जितं यत्ते धनमस्ति तस्य आयव्ययादि सुष्ठु परीक्ष्य—विचार्य, ते—तव, निदेशतः—आज्ञया त्वत् प्रीतये—तव प्रीत्यर्थं बहुविधं—बहुभिः प्रकारैः परितः—सर्वतः—वर्द्धयामि—वृद्धियुक्तं करिष्यामि। तथा यतिष्ये यथा गार्हस्थ्यसाधनस्य धनस्य सुमहती वृद्धिः स्यात्।

*तीसरे पदपर बहू कहती हैः—*

घरमें सुखपूर्वक रहनेके सब पदार्थ धनसे प्राप्त होते हैं। उचित उपायोंसे कमाया हुआ आपका जो धन होगा उसका मैं ऐसा संग्रह करूँगी कि आपको प्रसन्नता होगी। आय और व्यय आदिका ठीक मेल बैठाऊँगी और उससे आपको अवगत कराती रहूँगी:—

*At the third Step, the wife says:—*

Money is essential for everything in household affairs. Examining the sources of income and expenditure, I, with your consent, will manage so that the wealth, fairly earned by you, will go on growing more and more for your satisfaction.

चतुर्थपदे वर आह—(४)

संरक्षां ननु पारिणाह्यविषयां सौख्यप्रदानोद्धुरे !
नानाऽऽशंसितव तुसंग्रहधुरामारोप्य शीर्षे तव ॥
तत्तत्सौख्यनिमित्तवस्तुभरितं राष्ट्रं समृद्धं स्वकं
कुर्वन्कीर्तिमवाप्नुवन्निह महर्लोकं जयामि त्वया ॥११॥

चतुर्थे पदे मायोभवाय त्वेति वदन् वरो यद्यत् प्रतिजानीते तत्तद्द्वाभ्यां वर्ण्यते श्लोकाभ्याम्—

संरक्षां ननु.............................जयामि त्वया ॥११॥

हे प्रिये ! त्वं हि निखिलस्यापि गृहे वर्तमानस्य

वस्तुजातस्य सदुपयोगेन सर्वं इदं रचयन्ती मम जीवनञ्चैव सुखमयं कुर्वती सती सत्यं सौख्यप्रदाने उद्धुरा— सुखप्रदाने चतुरा। तथाविधे हे वधु ! यद्यदावयोः पारिणाह्यं—गृहवस्तुजातं, तद्विषयां संरक्षाम्— सम्यग् रक्षाम्, तव शीर्षे आरोप्य, किञ्च— नानाप्रकारकं यद् आशंसितम्— इष्टं, गृहे आवश्यकं, वस्तुजातं, तस्य यः संग्रहस्तस्य धरां— भारमपि तवशीर्षे आरोप्य, तत्तत् सर्वं यत् सौख्यनिमित्तं—सुखकारणभूतं वस्तुजातं तेन भरितं निजंराष्ट्रं समृद्धं कुर्वन्नह कीर्तिं—यशोऽवाप्नुवन्—प्राप्तं कुर्वन्निह—भूलोके एव वर्तमानः, त्वया—त्वत् साहाय्येन महर्लोकं चतुर्थं जयामि। त्वत्सहायतया सुखकारणानां वस्तूनां संग्रहं परिवर्धनं च कुर्वन्नहं निजराष्ट्रमपि समृद्धमवश्यमेव करिष्यामि, तेन च पुण्येन त्वया सह मे चतुर्थलोकजयोऽप्ययत्नसिद्धः। तदित्थं चतुर्थपदगतिः सुखप्राप्तये महर्लोकजयाय चेति भावः।

चौथे पदपर वर कहता है:—

सुख देनेके उपायोंको समझने वाली बहू जी, मैं अपने घरकी वस्तुओंकी रक्षा और विस्तारका भार तथा अनेक प्रकारके बढ़िया बढ़िया पदार्थोंके संग्रहकी चिन्ता तुम्हारे सिर पर छोड़ दूँगा। भाँति भाँतिके सुख देने वाली वस्तुओं से अपने राष्ट्रको समृद्ध बनाता हुआ इस लोकमें कीर्ति प्राप्त करता हुआ तुम्हारे साथ महर्लोकको जीत सकूँगा।

*At the fourth step, the husband says:—*

As you are expert in creating comforts, I appoint you the manager of my household

affairs and entrust you with the task of purchasing and preserving the different indispensable articles. Being relieved of the burden, I will look for the prosperity of my country and cause the exploitation of different sources of happiness. Thus increasing the wealth of my nation and gaining fame with you, I will conquer the 'MAHARLOKA'.

मायोभवाय विष्णुस्त्वां सुखविज्ञे! नयाम्यहम् ॥
चतुष्पदमिति प्रोक्ते पत्या प्राह वधूरिदम् ॥१२॥।

अयं त्वत्रैवपदेऽपरः प्रतिज्ञाश्लोकः—

मायोभवाय ........................ वधूरिदम् ॥१२॥

हे सुखविज्ञे—सुखं सुखीकरणोपायं विशेषेण जानातीति सुखविज्ञा । तत् सम्बुद्धिः=सुखविज्ञ इति । विष्णुरूपोऽहं मायोभवाय—सुखप्राप्तये त्वां चतुष्पदं पदचतुष्टयं नयामि ।

सुखतत्त्वको समझनेवाली बहूजी, विष्णुरूप मैं तुमको सांसारिक पदार्थोंके सुखके लिये चार पद अपने साथ ले चल रहा हूँ । पतिके ऐसा कहनेपर बहू कहती है ।

O, the Connoisseur of comforts, lady, I, Vishnu, take this fourth step with you for the collection of worldly things. Thus asked by the husband, the wife replied as follows:—

चतुर्थपदे वधूराह—

आवश्यकानि विविधानि गृहे त्वदीये
वस्तूनि यानि गृहिणां सुखसाधनानि ॥
तेषामहं समुदयं विरचय्य नूनं
त्वामात्मवर्गसहितं सुखयामि शश्वत् ॥१३॥

इत्येवं पत्या प्रोक्ते सति वधूरिदं प्राह—

आवश्यकानि ........................... शश्वत् ॥१३॥

त्वदीये गृहे यानि यान्यावश्यकानि—गृहस्थजीवनेऽपेक्षितानि विविधानि—बहुप्रकाराणि, गृहिणां—गृहस्थानां, सुखसाधनानि—सुखसाधनभूतानि वस्तूनि भवन्तीति शेषः, तेषां वस्तूनां समुदयम्—संग्रहरूपं संरक्षणरूपं च विरचय्य विशेषेण रचयित्वा नूनं निश्चयेन आत्मवर्गेण—तव स्वजन—समुदायेन सहितं त्वां शश्वत्—सदैव, सुखयामि—सुखिनं करिष्यामीत्यहं प्रतिजाने।

चौथे पदपर बहू कहती हैः—

घर बसाकर रहने वालोंको सुख देने वाली जितनी आवश्यक वस्तुएँ हो सकती हैं मैं उन सबका ठीक ठीक संग्रह करूँगी और परिवार सहित आपको निरन्तर सुख देती रहूँगी।

*At the fourth step, the wife says:—*

**I will try to increase the store of those**

necessary things of household which are the means of comfort and happiness in worldly life. Rest assured, sir. I will go on pleasing you and your family.

पञ्चमपदे वर आह—(५)

मेधाकान्तिबलाऽगदत्वरचनं गव्यं परं कारणं
तन्मूलं पशुवृन्दपालनमतस्त्वां तद्व्यवस्थापने ॥
वार्ताज्ञे ! विनियोज्य राष्ट्रभरणे कुर्वन् प्रयत्नं सदा
जानं लोकमहं त्वया सह पुनर्जेष्यामि शुद्धाशये! ॥१४॥

पञ्चमे पदे वरः पश्वर्थं त्वेति वदन्नेवं प्रतिजानीते—

मेधाकान्ति.......... ..............शुद्धाशये ॥१४॥

शुद्धः आशयोऽन्तःकरणं यस्याः तत्सम्बुद्धिर्हे शुद्धाशये ! वार्तां पशुपालन—व्यापारकृषिप्रभृतिं जानातीति वार्ताज्ञा । तत्सम्बुद्धिः=हे वार्ताज्ञे ! वधु ! मेधायाः—धारणावत्या धियः, कान्तेः—लावण्यस्य, बलस्य—शारीरमानसादिशक्तेः, अगद-त्वस्य—नीरोगतायाः, रचनं—रचनायाः प्रधानं हेतुभूतमेतस्य सर्वस्य रचने परं कारणं हि गव्यम्—गोक्षीरमस्तीति प्रसिद्धमेव । तस्य मूलम्—कारणभूतं पशुवृन्दस्य—गोवृषभादिपशु समूहस्य पालनमेवास्तीति शेषः । अतः कारणात् त्वां तद्व्यवस्थापने—तस्य—पशुवृन्दपालनस्य व्यवस्थापने—प्रबन्धादिकरणे विनि-योज्य—विनियुक्तां कृत्वा निजराष्ट्रस्य भरणे—पोषणे सदा प्रयत्नं कुर्वन्नहं त्वया सह जानं लोकं—जन इति नामकं पञ्चमं

लोकं पुनरवश्यं जेष्यामि । त्वत् साहाय्येन पशुवृन्दपरि-वर्धनेन राष्ट्रमपि क्षीरघृतादिभरितं कुर्वन्नहं तत्पुण्येनावश्यं पञ्चमं लोकं जेष्यामि । तदित्थमियं पञ्चमपदगतिः पञ्चम-लोकजयं द्योतयति ।

*पाँचवे पदपर वर कहता है:—*

वार्ता ( खेती, पशुपालन और व्यापार ) को जानने वाली, शुद्ध विचारों वाली बहू जी, गायके घी, दूध आदि, स्मरणशक्ति, कान्ति, बल और आरोग्य के श्रेष्ठ कारण हैं और वे ( घी, दूध आदि ) पशुओंके पालनसे प्राप्त हो सकते हैं । इसलिये मैं तुमको उनके पालनका काम सौंप कर राष्ट्रोन्नतिके काममें जुट जाऊँगा और इस भाँति तुम्हारे साथ जन लोकको जीत सकूँगा ।

*At the fifth step, the husband says:—*

O, learned and pure hearted lady, as the milk and ghee of cows are very essential for brains, beauty, vigour and health, the protection of cattle are necessary. Appointing you to mind the cattle and the agricultural needs of life, I will pay heed to the development of my country and conquer the 'JANALOKA', with your assistance.

पश्वर्थं विष्णुरूपो हे वार्तांज्ञे ! त्वां नयाम्यहम् ॥
पदपञ्चकमित्युक्ते पत्या प्राह वधूरिदम् ॥ १५ ॥

प्रतिज्ञाशेषं वर इत्थमाह—

पश्वथं ............................ बधूरिदम् ॥१५॥

हे वार्त्ताशास्त्रं जानाने वधु ! विष्णुरूपोऽहं त्वां पशुवृन्द-प्राप्त्यर्थं पदपञ्चकं नयामीति पत्योक्ते सति वधूरिदं एवं प्रतिजानीत इति तात्पर्यम्—

वार्ताको जानने वाली बहू जी, विष्णुरूप मैं तुमको पशु-पालनके लिये पाँच पद अपने साथ ले चल रहा हूँ। पतिके ऐसा कहने पर बहू कहती है।

O, lady agriculturist, I, Vishnu, take this fifth step with you for the protection of cattle. Thus asked by the husband the wife replied as follows:—

पञ्चमपदे वधूराह—

दधिदुग्धघृतादिसाधनं
कृषिवाणिज्यनिमित्तमस्ति यत् ॥
सुखदं परमं कुटुम्बिनां
पशुवृन्दं परिपालयामि तत् ॥१६॥

दधिदुग्धघृतादि ............................ तत् ॥१६॥

यत् दधिदुग्धघृतादिसाधनं—दध्नः, दुग्धस्यक्षीरस्य, घृतनवनीतामिक्षातक्रप्रभृतेरनेकस्य खाद्यपेयपदार्थजातस्य

साधनमुपायभूतम् , यच्च कृषेः—कृषिकर्मणः—हलकर्षणादि-द्वारा, वाणिज्यस्य—शकटाकर्षणभारोद्वहनादिद्वारा, निमित्तं—कारणभूतं; यच्च कुटुम्बिनां गृहस्थानां कुटम्बस्य पुष्ट्या—प्यायनेन च परमं श्रेष्ठं सुखदं—सुखकारणभूतं ते तव पशुवृन्द-मस्ति, तदहं सदा परिपालयामि—तस्य परिचालनं करिष्यामीत्यहं प्रतिजाने।

*पाँचवे पदपर बहू कहती है:—*

जिन पशुओंसे दही, दूध, घी आदि प्राप्त होते हैं, जिनके बल पर खेती और व्यापार होता है तथा जो गृहस्थोंको बहुत सुख देते हैं उन पशुओंका मैं पालन करूँगी।

*At the fifth step, the wife says:--*

I must protect the cattle, which are the immediate source of curd, milk and ghee etc., which are the cause of agriculture and business; and which are extremely useful for families.

**षष्ठपदे वर आह—(६)**

**आत्माऽयं परमो बहिर्मुखमहाऽऽनन्दाय वद्धीकृत-**
**स्तस्मात्त्वां परिणीय चित्तरचितं सर्वर्तु सौख्यं भजन् ॥**
**राष्ट्रप्रीणनतत्परं सुयशसं वंशं प्रतिष्ठापयन्**
**जेष्यामि प्रथितं त्वया सह तपोलोकं विशुद्धाशये ! ॥१७॥**

षष्ठलोकजयसूचके षष्ठे पदे वरोऽत्र ऋतुभ्यस्त्वेति वदन्नेवं प्रतिजानीतेः—

आत्माऽयं ………………… विशुद्धाशये ॥१७॥

**अयं जीवस्तु, परमार्थतः परमात्मा शिवभट्टारक एव।** स एव स्वस्वातन्त्र्यस्य महिम्ना बहिर्मुखाय इन्द्रियविषय-संसर्गजन्याय महते—विशालाय, आनन्दाय जीवभावं भजन् बद्धीकृतः—कर्मजालबद्धः सन् जीवावस्थायां वर्तमानः शिव एवाह, बाह्यानन्दप्राप्तये त्वां परिणीय त्वया साकं विवाहं विधाय, चित्तरचितं—चित्तसंकल्पितं सर्वेषामृतूनां सौख्यम्—आनन्द भजन् राष्ट्रस्य निजस्य प्रीणने सन्तोषणे तत्परं—सदैवोद्यतं, सुयशसं—शोभनकीर्त्ति युक्तं वंशं—कुलं प्रतिष्ठापयन्—पुत्रादीनामुत्पत्त्या निजवंशस्य प्रतिष्ठां कुर्वन्, राष्ट्रसेवयानया पुण्यमर्जयित्वा त्वया सह प्रथितम्—अतिप्रसिद्धं षष्ठं तपोलोकं जेष्यामि। हे विशुद्धाशय इति वध्वाः सम्बोधनम्। विशुद्धः—निर्मलः आशयः—अन्तःकरणं यस्याः सा विशुद्धाशया वधूः। अन्तः करणेनात्रान्तः—करणं वृत्तिरूपाः कामनाः उपलक्ष्यन्ते। विशुद्ध कामने साध्वि वध्वितिभावः।

छठे पदपर वर कहता है:—

विशुद्ध कामना वाली बहू जी, आत्माका निवास शरीर में बहिर्मुख आनन्दकी प्राप्तिके लिये है। इसलिये मैंने तुमसे विवाह किया है। मैं चाहता हूँ कि मन-चाहे ढंगसे सब ऋतुओंका सुख भोगता हुआ ऐसे यशस्वीवंशकी प्रतिष्ठा करूँ जो राष्ट्रको सन्तुष्ट करने वाला हो। तब मैं तुम्हारे साथ प्रसिद्ध तपोलोकको जीत सकूँगा।

*At the sixth step, the husband says:—*

O, refined lover, lady, this worthy soul stays confined to enjoy the worldly pleasures. It follows, therefore, that I must devise ways to experience fancifully all the comfortable phases of seasons and reproduce my kind, famous and dovoted to nation. Thus establishing my generation renowned I will conquer the 'TAPALOKA' with you.

विशुद्धकामने ! विष्णुऋ तुभ्यस्त्वां नयाम्यहम् ॥
पदषट्कमिति प्रोक्ते पत्या प्राह वधूरिदम् ॥१८॥

प्रतिज्ञाशेषं श्लोकेनाह—

विशुद्धकामने ! ........................ वधूरिदम् ॥१८॥

विशुद्धाः निर्मलाः—धर्म्याः कामनाः—इच्छाः यस्या सा विशुद्धकामना, साध्वी प्रतिव्रता। तस्याः सम्बुद्धिर्हि विशुद्ध-कामने वधु ! विष्णुरूपोऽहं ऋतुभ्यः=ऋतुषु लभ्येभ्यः, सुखेभ्यः त्वां पदषट्कं—षट्पदानि नयामि।

बिशुद्ध कामना वाली बहू जी, विष्णुरूप मैं तुमको ऋतुओंका सुख भोगने छह पद अपने साथ ले चल रहा हूँ। पतिके ऐसा कहनेपर बहू कहती है।

O, the lover of refined taste, I, Vishnu,

cover this sixth step with you for the enjoyment of seasons. Thus asked by the husband the wife replied as follows:—

षष्ठपदे वधूराह—

अद्वैतभावमुपगम्य तवाज्ञयैव
तत्तद्-हृषीकसुखसाधनतामुपेता
सर्वेषु तेषु ऋतुषु त्वयि बद्धभावा
त्वामर्चयामि नितरां परितोषयामि ॥१६॥

इत्येवं पत्या प्रोक्ते सति वधूरिदं प्राह—

अद्वैतभाव.............................परितोषयामि ॥१६॥

त्वया सहाद्वैतभावम्—अभेदसम्बन्धम्, उपगम्य—प्राप्य तवाज्ञयैव तस्य तस्य चक्षुः श्रोत्रत्वगादेः हृषीकस्य—इन्द्रियस्य यत् सुखं तस्य साधनतां—कारणतां उपेता प्राप्ता सती, इन्द्रियजन्यं तव सुखं सम्पादयन्ती, तेषु सर्वेषु ऋतुषु त्वयि बद्धः भावो यया सा बद्धस्नेहरसाहं त्वाम् अर्चयामि—पूजयामि नितराम्—अत्यन्तं च परितोषयामि—सन्तुष्टं सुखिनं करिष्यामि।

छठे पदपर बहू कहती है:—

मैं आपके और अपने बीचमें कोई अन्तर नहीं रखूँगी। आप जैसे कहोगे वैसे ही मैं भाँति भाँतिसे आपकी इन्द्रियोंके सुखका साधन बन जाऊँगी। सब ऋतुओंमें मैं अपना प्रेम आपको दूँगी। मैं आपकी इतनी पूजा करूँगी कि सदा प्रसन्न रखूँगी।

*At the sixth step, the wife says:—*

Feeling one with you, with your consent, I will be the means of your enjoyment of all the senses. Throughout the seasons, I will cherish you in my heart. I will worship you and satisfy you constantly.

सप्तमपदे वर आह—(७)

सख्यं साप्तपदीनमत्र मुनयः सम्पूर्णमाहुः सदा
 तेन त्वामभिगम्य सप्तममहं लोकं जयामि ध्रुवम् ॥
मोक्षार्थं हृदयं विधाय भवती राष्ट्रस्य सम्भावने
 मामेवाऽनुगता भविष्यति तदा मोक्षो न ते दुर्लभः ॥२०॥

सप्तमलोकजयसूचके सप्तमे पदे सख्यस्य परिपूर्णताप्रतिपादनार्थं वर एवं प्रतिश्रृणोतिः—

सख्यं साप्तपदीन..............................दुर्लभः ॥२०॥

हे प्रिये मुनयः अत्र संसारे सख्यं—मैत्रीं, साप्तपदीनम्—सप्तभिः पदैः प्राप्यम्, सत् सम्पूर्णं—सर्वथा परिपूर्णम् आहुः—उपादिशन् । परस्परेण साकं सप्तपदभूमिचलनेनैव सज्जनानां मैत्री भवतीति भावः । तेनैवसाप्तपदीनेन सख्येन त्वाम् अभिगम्य—पत्निरूपेण प्राप्य, अहं ध्रुवं अवश्यमेव सप्तमं लोकं सत्यलोकाख्यं जयामि इति मे निश्चयः । भवती अपि मोक्षार्थं—मोक्षप्राप्तये, राष्ट्रस्य—स्वनिवसनभूमेः—पितृभूस्वरूपस्य पुण्यभूस्वरूपस्य च सम्भावने—सम्यग् भावने—हृदयं स्वकीयं

विधाय—स्वराष्ट्रसमुन्नतौ दत्तचित्ता सती, मामेवानुगता—अनुसरन्ती चेद् भविष्यति तदा ते भवत्याः मोक्षो दुर्लभो न भवितेति शेषः। स्वतन्त्रे परिपूर्णवैभवशालिन्येव च राष्ट्रे मोक्ष-प्राप्तिः सुलभा न पुनः परतन्त्रे विभूतिविहीने वेति भावः।

*सातवें पदपर वर कहता है:—*

मुनि लोग मित्रताको साप्तपदीन ( सात पद साथ चलने से होने वाली ) कहते हैं। इसलिये मैं भी तुम्हारे साथ उतना चलकर ( वैसी मित्रता स्थापित करके ) सातवें लोक ( सत्य लोक ) को जीत लूँगा। मोक्षकी साध मनमें बसा कर यदि तुम राष्ट्रके उन्नतिकर्मोंमें मेरे पीछे पीछे चलोगी तो मोक्ष तुम्हारे लिये दुर्लभ नहीं होगा।

*At the seventh step, the husband says:—*

Sages are of opinion that friendship is made by covering seven steps together. So please let me cover seven steps togethεr with you for couquering the seventh loka, 'SATYALOKA'. If you, cherishing your wish for salvation, please do follow me in responding respectfully to the needs of my nation, salvation shall not be far from you.

वध्वाः प्रतिश्रुतं ज्ञात्वा पतिः प्राहैवमुत्तमम् ॥
सखे ! सप्तपदा भव सा मामनुव्रता भव ॥२१॥

वरकृताः प्रतिज्ञाः निगमयन्नेवाचार्यवर्य्यो वरस्य प्रतिज्ञाशेषं प्रतिपादयति—

वध्वाः प्रतिश्रुतं ........................ ... भव ॥२१॥

वध्वाः प्रतिश्रुतं—प्रतिज्ञातिं स्वीकृतिं ज्ञात्वा पतिः एवम्—अनेन प्रकारेण, उत्तमम्—चरमं प्रतिज्ञावाक्यम् आह—

हे सखे ! सख्यभावं प्राप्स्यन्ति ! वधु ! सप्तपदा भव—सप्तपद—प्राप्यं परिपूर्णं सख्यभावं प्राप्नुहि, सा—एवं भूता—परिपूर्णं सख्यं प्राप्ता सती माम् अनुव्रता—अनुगता भव। ममैवानुसरणं कुरु।

बहूकी सहमति जान कर अन्तमें पति कहता है कि हे सखे, मेरे साथ सात पद वाली मित्रता (पूर्णमित्रता) प्राप्त करो तथा मेरी इच्छाका अनुकरण करने वाली बनो।

*After the wife has promised all proposed so far, the husband says, at last, as follows:—*

Friend, please, let us cover the seventh step together for our complete friendship. please be a constant wife ( Please do make up your mind to follow me always sincerely. )

सप्तमपदे वधूराह—

प्राप्तं मया मनुजदेहफलं समस्तं
यत्सख्यमुत्तममहं भवता गताऽद्य ॥

सर्वं प्रतिश्रुतमिदं हृदये दधाना
त्वामेव पूर्णहृदयेन नु कामयिष्ये ॥२२॥

पत्युः चरमं प्रतिज्ञावाक्यं श्रुत्वा वधूरपि स्वप्रतिज्ञा एवं निगमयति—

प्राप्तं मया ……… ……………… कामयिष्ये ॥२२॥

यदहम् अद्य भवता उत्तमं—साप्तपदीनमग्निसाक्षिकं सख्यं—मैत्रीं गता—प्राप्ता, तन्मया समस्तं मनुजदेहे प्राप्यं फलं—धर्मार्थकाममोक्षरूपं प्राप्तम्—अवश्यमेवाहं सम्पूर्णं मानवशरीरफलं प्राप्स्यामीतिभावः । सर्वं चेदं सप्तसु पदेषु प्रतिश्रुतं—प्रतिज्ञातं सदैव हृदये दधाना—धारयन्ती कदाप्येतन्न विस्मरन्ती, अहं त्वामेव—न त्वन्यं कमपि पूर्णेन हृदयेन नु—निश्चयेन कामयिष्ये—तवैव कामनां यावज्जीवं करिष्यामीत्यहं प्रतिजाने ।

*सातवें पदपर बहू कहती है:—*

यह जो मैं आज आपकी उत्तमकोटिकी मित्र बन गई हूँ इससे मैंने मनुष्यदेहका सारा फल प्राप्त कर लिया । मैंने आपके साथ जो भी प्रतिज्ञाएँ की हैं उन सबको मनमें बसा कर मैं आपको ही पूरे हृदयसे चाहती रहूँगी ।

*At the seventh step, the wife says:—*

Sir, today I gained the full object of human life as I secured the highest kind of

friendship with you. I will remember the oaths just taken and adore you sincerely with my full heart.

श्रीसप्तपदीहृदयं प्रणीय शास्त्रानुकूलमर्थज्ञः ॥
वाञ्छति विश्वोद्धारं श्रीमदमृतवाग्भवाचार्यः ॥२३॥

श्रीसप्तपदीहृदयं..........श्रीमदमृतवाग्भवाचार्यः ॥२३॥

अर्थं जानातीत्यर्थज्ञः--इषे त्वेत्यादीनां सौत्राणां शब्दानां रहस्यभूतमर्थं जानानः, श्रीमान् अमृतवाग्भवाख्य आचार्यमहोदयः श्रीसप्तपदीहृदयाख्यमिमं ग्रन्थं प्रणीय विश्वस्योद्धारं वाञ्छति— न पुनरर्थादिकं स्वार्थोपहितं किमपि । तेनात्र परोपकारमात्रं प्रयोजनं ग्रन्थकर्तुः ।

शास्त्रके अनुकूल अर्थको जानने वाले श्रीमान् अमृत-वाग्भव आचार्य श्री सप्तपदीहृदयकी रचना करके विश्वका उद्धार चाहते हैं ।

Shri Amrita Vagbhavacharya, having conprehended the connotations of the script-ure and sacred writings, solicits the unive-rsal good by composing this Shri Sapta Padi Hridayam, accodring to the shastras.

षडङ्कनन्देन्दुमिते गते वैक्रमवत्सरे ॥
एकादश्यां रवौ माघे कृष्णपक्षे कृतिः कृता ॥२४॥

षडङ्कनन्देन्दुमिते............................कृता ॥२४॥

इयं सप्तपदीहृदयरूपा कृतिः--एव ग्रन्थः इति। षडङ्कनन्देन्दुमिते १९९६ इति संख्याके, इमां संख्यां गते—प्राप्ते वैक्रमेशकारिप्रवर्तिते वत्सरे एकादश्यां तिथौ रवेर्वारि, माघमासि, कृष्णपक्षे श्रीमताऽमृतवाग्भवाचार्यवर्य्येण कृता।

विक्रमसंवत् १९९६ माघ वदि एकादशी रविवारको इस कृतिकी रचना हुई।

This work was completed (by the author) on the eleventh instant, Sunday, falling in the first fortnight of the month of Magha, in the year 1996 of the Era of Vikramaditya.



श्रीः

# शुद्धिपत्रम्

| अशुद्ध | पृ० | प० | शुद्ध |
| --- | --- | --- | --- |
| क्षेम्णे | २ | ४ | क्षेमाय |
| आचार्मे | १७ | २२ | आचार्य |
| सद्दभ | १८ | १० | सद्वृत्त २ |
| सद्दत्त | १८ | २० | सद्वृभ |
| समस्योंका | २० | ३ | समस्याओंका |
| सद्दत्तका | २० | १८ | सद्वृत्तका |
| सद्दत्त | २१ | ८ | सद्वृत्त |
| घमार्थ | ३२ | १५ | धर्माथं |
| राष्टे | ३४ | ११ | राष्ट्रे |
| निदेशात ते | ४३ | १० | निदेशातस्ते |
| व तु | ४४ | १५ | वस्तु |

| | | | |
| --- | --- | --- | --- |
| Societ | Society | Page 8 | Line 21 |
| Speakings | Speaking | Page 10 | Line 14 |
| Firest | First | Page 37 | Line 4 |
| Conomist | Economist | Page 43 | Line 3 |

# श्रीपञ्चस्तवी

द्वितीय संस्करण प्रस्तुत है। यह प्रथम लघुस्तवकी ६०० वर्षसे भी अधिक प्राचीन संस्कृत टीका तथा राष्ट्रभाषानुवादके साथ मुद्रित है। शेष चार स्तोत्र मूलमात्र हैं। साथ ही इस संस्करणमें श्रीमहानुभवशक्तिस्तव भी दिया गया है। कागज और छपाई बहुत उत्तम है। डाक व्यय अलग

तीसरी बार **श्रीराष्ट्रालोक** छप गया

## राष्ट्रभाषानुवाद-सहित

राष्ट्रवादी ही आर्य हैं आर्य ही शान्तिकी स्थापना कर सकते हैं।

## भारत भारतीयोंका है

स्वातन्त्र्य हमारा जन्मसिद्ध अधिकार है। राष्ट्र हमारा पिता है, माता है, और आचार्य है। हम सदा उसके सेवक हैं। हमारा राष्ट्र हमें भोग और मोक्ष दोनों देता है।

## हम सच्चे राष्ट्रिय हैं।

## अभारतीय भारतके अतिथि हो सकते हैं राष्ट्रिय नहीं

हम संक्रान्तिका सदा आदर करते हैं। हमें ऐसी शान्ति नहीं ाहिये जो राष्ट्रको परतन्त्र बनाये।

## राष्ट्रिय राष्ट्रके पुत्र होते हैं, पति नहीं

भारतीय अपने आपको हिन्दू माननेमें गौरवका अनुभव करते हैं। भारतीय आदर्शके विपरीत क्रान्ति किंक्रान्ति है संक्रान्ति नहीं। यदि आप इन भावोंसे स्नेह करते हैं तो "श्रीराष्ट्रालोक" अवश्य पढ़िये।

## श्रीराष्ट्रालोक परम पवित्र भारतीय आदर्शोंका एक जीवन शास्त्र है

राष्ट्रप्रेमी इसका आदर कर रहे हैं। जनता हाथों हाथ अपना रही है। आप भी आज ही मँगाईये। मू० ॥) मार्गव्यय अलग

श्रीः

## श्रीमदमृतग्रन्थमाला के चार पुष्पः—

१. श्रीमहानुभवशक्तिस्तवः – *संस्कृत तथा हिन्दी व्याख्या सहित मूल्य ॥)*

२. श्रीपरशुरामस्तोत्रः—*राष्ट्रभाषानुवादसहित सचित्र तृतीय संस्करण मूल्य विश्वोद्धार*

३. श्री श्रीविंशतिकाशास्त्रम्ः—*दो संस्कृत व्याख्याओं तथा एक हिन्दी व्याख्या के साथ मूल्य रु० ७५ न. पै.*

४. श्रीसप्तपदीहृदयम्ः—*संस्कृत-हिन्दी-इङ्गलिश रूपान्तरों के साथ आपके हाथों में ही है।*

## अन्य प्रकाशित ग्रन्थ रत्न

१. श्री राष्ट्रालोकः– *राष्ट्रभाषानुवाद सहित तृतीय संस्करण मूल्य ॥)*

२. श्री आत्मविलासः—*"श्रीसुन्दरी" राष्ट्रभाषाभाष्य सहित मूल्य २)*

३. श्रीसंक्रान्तिपंचदशीः—*राष्ट्रभाषागद्यपद्यानुवादसहित द्वितीय सस्करण (मुद्रणालय में)*

४ श्रीमदमृतसूक्तिपंचाशिकाः—*संस्कृत तथा राष्ट्रभाषा व्याख्यासहित (मुद्रणालय में)*

५. श्रीस्वाध्यायमहिमस्तोत्रः—*(प्रकाशनीय)*

मुद्रकः—नवयुग प्रेस, भरतपुर।